षूर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञः स्यात्। **नीचैरनुदात्तः ।१।२।३०।** ताल्वादिषु सभागेषु स्थानेष्वधो भागे निष्पन्नोऽजनुदात्तसंज्ञः स्यात्। **समाहारः स्वरितः ।१।२।३१।** उदात्तत्वानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन् सोऽच् स्वरितसंज्ञः स्यात्। स नवविधोऽपि प्रत्येकमनुनासिकत्वाननुनासिकत्वाभ्यां द्विधा॥ **मुखनासिकावचनोऽनुनासिकः ।१।१।८।** मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात्। तदित्थम्—अ इ उ ऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः। ऌवर्णस्य द्वादश। तस्य दीर्घाभावात्। एचामपि द्वादश। तेषां ह्रस्वाभावात्॥ **तुल्यास्यप्रयत्नं सवर्णम् ।१।१।९।** ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः सव-

---

भागे इत्यर्थे वर्तते, तदाह—नीचैरिति। समाहारः स्वरित इति। पूर्वसूत्राभ्यां उदात्तानुदात्तपदे अनुवृत्ते व्याख्यानात् धर्मप्रधाने षष्ठ्यन्ततया च विपरिणम्येते। यस्मिन् समाहरणं स समाहारः। अधिकरणे घञ्। ततश्च उदात्तत्वानुदात्तत्वयोर्धर्मयोर्यस्मिन्नचि मेलनं सोऽच् स्वरितसंज्ञक इत्यर्थः। तदेतत्फलितमाह—उदात्तत्वानुदात्तत्वे इति। स नवविधोऽपीति। १ उदात्तह्रस्वः, २ अनुदात्तह्रस्वः, ३ स्वरितह्रस्वः, ४ उदात्तदीर्घः, ५ अनुदात्तदीर्घः, ६ स्वरितदीर्घः, ७ उदात्तप्लुतः, ८ अनुदात्तप्लुतः, ९ स्वरितप्लुतः, इति रीत्या य एकैकः अच् नवविधः स्थितः स प्रत्येकमनुनासिकत्वेन अननुनासिकत्वेन च द्विधा द्वाभ्यां प्रकाराभ्यां वर्तत इत्यर्थः। मुखनासिकेति। मुखद्वितीया नासिका मुखनासिकेति शाकपार्थिवादित्वादुत्तरपदलोपः। उच्यतेऽसौ वचनः 'कर्मणि ल्युट्'। मुखनासिकया वचनः मुखनासिकावचन इति। ननु अष्टादशभेदाः किं सर्वेषामचामविशिष्टाः, नेत्याह—तदित्थमिति। अष्टादशभेदा इति। अष्टादशप्रकारा इत्यर्थः। दीर्घाभावादिति। तथा च उदात्तऌकारदीर्घः, अनुदात्तऌकारदीर्घः, स्वरितऌकारदीर्घः। ते च अनुनासिकास्त्रयः अननुनासिकास्त्रय इति षड्भेदानामभावे सति ह्रस्वप्रपञ्चः षड्विधः प्लुतप्रपञ्चश्च षड्विध इति ऌकारस्य द्वादशविधत्वमेवेति भावः। ऌकारस्य दीर्घाभावे—होतृ ऌकार इत्यत्र सवर्णदीर्घे कृते होतॄकारः इति ऋकारस्यैव "तुल्यास्य" सूत्रे 'अकः सवर्णे" इति सूत्रे च भाष्योदाहरणमेव प्रमाणम्। ह्रस्वाभावादिति। यदि एचो ह्रस्वाः स्युस्तर्हि वर्णसमाम्नाये त एव लाघवात् अ इ उ इत्यादिवत् पठ्येरन्। न तु दीर्घाः गौरवात्। अतः एचो ह्रस्वाः न सन्तीति विज्ञायते। एवञ्च ह्रस्वप्रपञ्चषड्भेदाभावात् द्वादशविधत्वमेवैषाम् इति भावः। तुल्यास्येति। आस्ये—मुखे भवम् आस्यं ताल्वादिस्थानम् "शरीरावयवाद्यत्" इति भवार्थे यत्प्रत्ययः। प्रकृष्टो यत्नः प्रयत्नः। आस्यं च प्रयत्नश्च आस्यप्रयत्नौ, तुल्यौ आस्यप्रयत्नौ यस्य वर्णस्य तत् तुल्यास्यप्रयत्नं परस्परं सवर्णसंज्ञकं स्यादिति भावस्तदाह—ताल्वादीति। मिथ इति। परस्परमित्यर्थः। कस्य किं स्थानमित्याकाङ्क्षायां तद्व्यवस्थापकानि पाणिन्यादिशिक्षावचनानि भवतः सङ्गृ-

र्णसंज्ञः स्यात्। ( ऋऌवर्णयोर्मिथः सावर्ण्यं वाच्यम् ) अकुहविसर्जनीयानां कण्ठः। इचुयशानां तालु। ऋटुरषाणां मूर्धा। ऌतुलसानां दन्ताः। उपूपध्मानीयानामोष्ठौ। ञमङणनानां नासिका च। एदैतोः कण्ठतालु। ओदौतोः कण्ठोष्ठम्। वकारस्य दन्तोष्ठम्। जिह्वामूलीयस्य जिह्वामूलम्। नासिकाऽनुस्वारस्य॥ यत्नो द्विधा—आभ्यन्तरो बाह्यश्च। आद्यः पञ्चधा, स्पृष्टेषत्स्पृष्टेषद्विवृतविवृतसंवृतभेदात्। तत्र स्पृष्टं प्रयतनं स्पर्शानाम्। ईषत्स्पृष्टमन्तःस्थानाम्। ईषद्विवृतमूष्मणाम्। विवृतं स्वराणाम्। ह्रस्वस्यावर्णस्य प्रयोगे संवृतम्। प्रक्रिया-

---

द्वारि—अकुहेत्यादिना। 'अ' इत्यष्टादशभेदा गृह्यन्ते। 'कु' इति कादिपञ्चकात्मकः कवर्गः। अश्च कुश्च हश्च विसर्जनीयश्चेति विग्रहः। विसर्जनीयशब्दोऽपि विसर्गपर्यायः। इचुयशेति। 'इ' इत्यष्टादश भेदाः। 'चु' इति चवर्गः। इश्च चुश्च यश्च शश्चेति विग्रहः। ऋटुरषेति। 'ऋ' इत्यष्टादश भेदाः। 'टु' इति टवर्गः। ऋश्च टुश्च रश्च षश्चेति विग्रहः। 'मूर्धन्' शब्दस्य आ इति प्रथमैकवचनान्तम्, आत्मा इतिवत्। ऌतुलसेति। 'ऌ' इत्यस्य द्वादश भेदाः। 'तु' इति तवर्गः। ऌश्च तुश्च लश्च सश्चेति विग्रहः। दन्त-शब्दस्यापि आ इत्येव प्रथमैकवचनान्तत्वम् आ, अतौ अतः इति। दन्तशब्देन दन्तमूलप्रदेशो विवक्षितः। अन्यथा अभ्यन्तरस्य तदुच्चारणानुपपत्तेः। उपूपेति। 'उ' इत्यष्टादशभेदाः। 'पु' इति पवर्गः। उश्च पुश्च उपध्मानीयश्चेति विग्रहः। उपध्मानीयशब्दस्य व्याख्यानमनुपदमेव मूले स्पष्टं भविष्यति। ञमङणनेति। ञश्च मश्च ङश्च णश्च नश्चेति विग्रहः। चकारेण स्वस्ववर्गीयस्थानसमुच्चयः। एदैतोरिति। एच्च ऐच्च एदैतौ। तपरकरणमसन्देहार्थम्। ओदौतोरिति। ओच्च औच्च ओदौतौ। तपरकरणं पूर्ववदसन्देहार्थमेव। जिह्वामूलीयस्येति। ≍क ≍ख इति कखाभ्यां प्रागर्धविसर्गसदृशो जिह्वामूलीय इति अग्रे मूले एव उक्तम्। अनुस्वारस्येति। स्थानमिति शेषः। अनुस्वारस्य नासिकास्थानमस्तीति भावः। यत्नो द्विधेति। यत्नानामाभ्यन्तरत्वं बाह्यत्वं च वर्णोत्पत्तेः प्रागूर्ध्वभावित्वमिति पाणिन्यादिशिक्षासु स्पष्टम्। यत्न इति। यत्नशब्दोऽत्र प्रयत्नपरः। आद्य इति। आभ्यन्तरप्रयत्न इत्यर्थः। कथं पञ्चधा इत्यत आह—स्पृष्टेत्यादिना। तत्रेति। स्पृष्ट, ईषत्स्पृष्ट, ईषद्विवृत, विवृत, संवृत एषु मध्ये इत्यर्थः। प्रयतनमिति। प्रयत्न इत्यर्थः। स्पर्शानामिति। स्पर्शवर्णानामित्यर्थः। के ते वर्णाः इति मूले स्फुटीभविष्यन्ति। तथापि निर्दिश्यन्ते अत्रापि—क ख ग घ ङ, च छ ज झ ञ, ट ठ ड ढ ण, त थ द ध न, प फ ब भ म, कवर्णादारभ्य मवर्णपर्यन्तम्। अन्तःस्थानामिति। यरलवानामित्यर्थः। ऊष्मणामिति। श ष स ह इत्येतेषामित्यर्थः। स्वराणामिति। अ इ उ ऋ ऌ ए ओ ऐ औ इत्येतेषामित्यर्थः। प्रयोग इति। शास्त्रीयप्रक्रियाभिः परिनिष्ठितानां रामः कृष्णः इत्यादिशब्दानां प्रयोगे क्रियमाणे एव ह्रस्वस्यावर्णस्य संवृतत्वमित्यर्थः। प्रक्रियेति। शास्त्रीयकार्यप्रवृत्तिसमये दण्ड-आढक

शायां तु **विवृतमेव** ॥ बाह्यप्रयत्नस्त्वेकादशधा । विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति । खरो विवाराः श्वासा अघोषाश्च । हशः संवारा नादा घोषाश्च । वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्पप्राणाः । वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः । कादयो मावसानाः स्पर्शाः । यणोऽन्तःस्थाः । शल ऊष्माणः । अचः स्वराः । ᳵक ᳵख इति कखाभ्यां प्रागर्धविसर्गसदृशो **जिह्वामूलीयः** । ᳶप ᳶफ इति पफाभ्यां प्रागर्धविसर्गसदृश उपध्मानीयः । अं अः इत्यचः परावनुस्वारविसर्गौ ॥ **अणुदित्सवर्णस्य चाप्रत्ययः** ।१।१।६९। प्रतीयते विधीयत इति प्रत्ययः । अविधीयमानोऽणुदिच्च सवर्णस्य संज्ञा स्यात् । अत्रैवाण् परेण णकारेण । कुचुटुतुपु एते उदितः । तदेवम्—अ इत्यष्टादशानां संज्ञा । तथेकारोकारौ । ऋकारस्त्रिंशतः । एवं लृकारोऽपि । एचो द्वादशा-

---

इत्यादौ सवर्णदीर्घादिकर्तव्ये तु विवृतत्वमेव । तेन सन्धिकार्यं निर्बाधमेव । एतत्सर्वं "पूर्वत्रासिद्धम्" इत्यनेन ज्ञापितमिति सिद्धान्तकौमुद्यां स्पष्टम् । बाह्येति । वर्णोत्पत्त्यनन्तरजातो यत्नो बाह्यप्रयत्न इत्युच्यते । खर इति । ख फ छ ठ थ च ट त क प, श ष स इति वर्णाः । विवारा इति । विवारादिप्रयत्नवन्तः इत्यर्थः । हश इति । ह य व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द इति वर्णा इत्यर्थः । संवारा इति । संवारादिप्रयत्नवन्तः इत्यर्थः । अल्पप्राणा इति । कगङ, चजञ, टडण, तदन, पबम, यरलव इत्येतेषां वर्णानाम् अल्पप्राणः इति भावः । खघ, छझ, ठढ, थध, फभ शषसह इत्येतेषां महाप्राणः इत्यपि ज्ञेयम् । कादय इति । कम इत्यादिमपर्यन्तमिलिताः पूर्वमुक्ताः वर्णाः इत्यर्थः । क आदिर्येषां ते कादयः म अवसाने येषां ते मावसाना इति । यण इति । यण् प्रत्याहारान्तर्गतवर्णाः 'यरलवाः' इत्यर्थः । शल इति । शल्प्रत्याहारान्तर्गतवर्णाः 'श ष स ह' इत्यर्थः । स्वरा इति । स्वेन राजन्त इति स्वराः 'अ इ उ ऋ ऌ ए ओ ऐ औ' इति वर्णा इत्यर्थः । अणुदिदिति । अण् अविधीयमानः सवर्णबोधकः उदित् विधीयमानोऽपि सवर्णबोधको भवतीत्यर्थः । तेन "ऋत उत्" इत्यादौ विधीयमाने उति न सवर्णग्रहणम् । "कुहोश्चुः" "चोः कुः" इत्यादौ विधीयमानेऽपि सवर्णग्रहणमिति भावः । अत्रैवेति । अस्मिन्नेव सूत्रे इत्यर्थः । अन्यत्र तु "अणोऽप्रगृह्यस्य" इत्यादौ । पूर्वणकारेण सह प्रत्याहारः । अत्र व्याख्यानमेव शरणम् । पूर्वेणैवाण्ग्रहाः सर्वे परेणैवेण्ग्रहा मताः । ऋतेऽणुदित्सवर्णस्येत्येतदेकं परेण तु ॥ इति भाष्यकारेणोक्तम् । उदित इति । उदित्त्वेन रूपेण बोधकाः । तदेवमिति । तत् "अणुदित्" सूत्रम्, एवं वक्ष्यमाणप्रकारेण फलतीत्यर्थः । अष्टादशानामिति । (१) ह्रस्वोदात्तानुनासिकः (२) । ह्रस्व, उदा० अननु० । (३) ह्र० अनुदा० अनु० । (४) ह्र० अनु० अननु० । (५) ह्र० स्व० अ० । (६) ह्र० स्व० अननु० ॥ (७) दीर्घ, उ० अ० । (८) दी० उ० अननु० । (९) दी० अ० अनु० । (१०) दी०

नाम् । अनुनासिकाऽननुनासिकभेदेन यवला द्विधा । तेनाऽननुनासिकास्ते द्वयोर्द्वयो संज्ञा ॥ परः सन्निकर्षः संहिता ।१।४।१०९। वर्णानामतिशयितः सन्निधिः संहितासंज्ञः स्यात् । हलोऽनन्तराः संयोगः ।१।१।७। अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः ॥ सुप्तिङन्तं पदम् ।१।४।१४। सुबन्तं तिङन्तं च पदसंज्ञं स्यात्

इति संज्ञाप्रकरणम् ॥

---

## ॥ अथाच्सन्धिप्रकरणम् ॥

इको यणचि ।६।१।७७। इकः स्थाने यण् स्यादचि संहितायां विषये । सुधी उपास्य इति स्थिते ॥ तस्मिन्निति निर्दिष्टे पूर्वस्य ।१।१।६६। सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य बोध्यम् ॥ स्थानेऽ

---

अ०अन० (११)दी०स्व०अ० । (१२) दी०स्व०अन० ॥ (१३) प्लु०उ०अ० । (१४)प्लु० उ०अन० । (१५)प्लु०अ०अ० । (१६) प्लु०अ०अन० ॥ (१७)प्लु०स्व०अ० । (१८) प्लु० स्व०अननु० ॥ इत्येतेषामित्यर्थः ॥ तथेति । अनया रीत्या इकार उकारयोरपि बोध्यम् । ऌकार इति । अनेन प्रकारेण । ऋकारस्य अष्टादश । ऌकारस्य दीर्घाभावात्, ऌकारदीर्घषट्कं विहाय द्वादश । ऋकारऌकारयोः सावर्ण्यात् मिलित्वा त्रिंशत् इति भावः ॥ एवमिति । पूर्वोक्तप्रकारेणैव ॥ एच इति । द्वादशानां बोधकाः । तद्यथा—ए, ओ, ऐ, औ, इति प्रत्येकं द्वादश इति भावः । ननु स्थानप्रयत्नयोस्तुल्यत्वात् सावर्ण्येन ए ऐकारस्य, ओ औकारस्य बोधकस्तेन चतुर्विंशतेः संज्ञकः एकारः, एवमोकारः स्यादिति चेत्, न । "ऐऔच्" इति पृथक् सूत्रत्वेन तयोः सावर्ण्याभावज्ञापकत्वात् ॥ तेनेति । यवलानां प्रकारद्वयम् । परः सन्निकर्ष इति ॥ पर. अतिशयितः, सन्निकर्षः सामीप्यं अर्धमात्राधिककालव्यवधानाभावः । अर्धमात्राकालव्यवधानस्य अवर्जनीयत्वात् । तदेतदभिप्रेत्याह—अतिशयित इत्यादिना । संहितेति । स्वभावसिद्धार्धमात्रातिरिक्तकालव्यवायशून्यः संहिता इति भावः । संयोग इति । स्वरसंज्ञकवर्णैर्व्यवधानशून्या हल्वर्णाः संयोगसंज्ञका इत्यर्थः । सुप्तिङिति । "स्वौजसमौट्" इति सूत्रे सुइत्यारभ्य सुपः पकारेण प्रत्याहारः । ननु सप्तमीबहुवचनस्यैवात्र ग्रहणम्, व्याख्यानात् ॥ "तिप्तस् झि०" इति सूत्रे तिइत्यारभ्य महिङो ङकारेण प्रत्याहारः । सुप् च तिङ् च सुप्तिङौ तावन्ते यस्य तत् सुप्तिङन्त शब्दस्वरूपम् इति शब्दशास्त्रप्रस्तावाल्लभ्यते । अन्तशब्दश्च प्रत्येकं सम्बध्यते तदेतदभिप्रेत्याह—सुबन्तमित्यादिना । इति संज्ञाप्रकरणम् ।

इकः स्थान इति । इक इति षष्ठी "षष्ठी स्थाने योगा" इति सूत्रेण स्थान इति लभ्यते । स्थानञ्च प्रसङ्गः । तथाहि—इकामुच्चारणप्रसङ्गे यणामुच्चारणं कर्तव्यमित्यर्थः ॥ सुधी इति । ध्यै चिन्तायामिति धातोः "ध्यायतेः सम्प्रसारणञ्च" इति क्विपि यकारस्य सम्प्रसारणे इकारे पूर्वरूपे "हलः" इति दीर्घे धीशब्दो निष्पन्नः । शोभना

**न्तरतमः ।१।१।५०।** प्रसङ्गे सति सदृशतम आदेशः स्यात् । सुध् य् उपास्य इति जाते ॥ **अनचि च ।८।४।४७।** अचः परस्य यरो द्वे वा स्तो न त्वचि ॥ **झलां जश् झशि ।८।४।५३।** स्पष्टम् । इति धकारस्य दकारः ॥ **संयोगान्तस्य लोपः ।८।२।२३।** संयोगान्तं यत्पदं तदन्तस्य लोपः स्यात् ॥ **अलोऽन्त्यस्य ।१।१।५२।** षष्ठीनिर्दिष्टोऽन्त्यस्याल आदेशः स्यात् । इति यलोपे प्राप्ते । ( **यणः प्रतिषेधो वाच्यः** ) । सुद्ध्युपास्यः, मध्वरिः, धात्रंशः, लाकृतिः ॥ **एचोऽयवायावः ।६।१।७८।** एचः क्रमादय् अव् आय् आव् एते स्युरचि ॥ **यथासंख्यमनुदेशः समानाम् ।१।३।१०।** समसम्बन्धी विधिर्यथासंख्य स्यात् । हरये,

---

धीर्येषामस्ते सुधियः । सुधीभिः उपास्यः सुध्युपास्यः ॥ अत्र सुधी उपास्य इति स्थिते "इको यणचि" इति सूत्रेण अजव्यवहितपूर्वइक्–धकारोत्तरवर्ति ई, तस्य स्थाने "स्थानेऽन्तरतमः" इति सूत्रेण 'य्' न तु "वरलाः" आन्तरतम्याभावात् । 'सुधय् उपास्य' इति जाते "अनचि च" इति सूत्रेण धकारस्य द्वित्वे "झलां जश् झशि" इति सूत्रेण प्रथमधकारस्य दकारे सुद्ध्य् उपास्य इत्यवस्थायां "संयोगान्तस्य लोपः" इति सूत्रेण यकारस्य लोपे प्राप्ते "यणः प्रतिषेधो वाच्यः" इति वार्तिकेन यलोपनिषेधे सति सुद्ध्युपास्यः इति रूपं सिद्धम् ॥ मध्वरिः इति ॥ मधोः अरिः मध्वरिः । मधुनामकदैत्यस्य अरिः शत्रुः श्रीकृष्ण इत्यर्थः ॥ अत्र साध्यते–मधु–अरिः इति स्थिते "इको यणचि" इति सूत्रेण अजव्यवहितपूर्वस्वविशिष्ट इक् धकारोत्तरवर्ति 'उ' तस्य स्थाने "स्थानेऽन्तरतमः" इति परिभाषया (वकारस्य उपूपध्मानीयानामोष्ठौ उभयोः उकारवकारयोः स्थानसाम्यात्) 'व्' जाते 'मध् व् अरिः' इत्यवस्थायाम् "अनचि च" इत्यनेन द्वित्वे "झलां जश् झशि" इत्यनेन धकारस्य दकारे "संयोगान्तस्य लोपः" इति सूत्रेण लोपे प्राप्ते "यणः प्रतिषेधो वाच्यः" इत्यनेन निषिद्धे सति मध्वरिः इति रूपं सिद्धम् । धात्रंशः इति । धातुः अंशः धात्रंशः । धातृ अंशः इति स्थिते "इको यणचि" इत्यनेन ऋ स्थाने स्थानेऽन्तरतमपरिभाषया र् कृतः । अत्रापि "संयोगान्तस्य लोपः" इति लोपे प्राप्ते "यणः प्रतिषेधो वाच्यः" इत्यनेन निषिद्धे 'धात्रंशः' इति सिद्धम्भवति ॥ लाकृतिरिति । लृरिव आकृतिः यस्य सः इति विग्रहः इति भावः । लृ–आकृतिः इत्यत्र "इको यणचि" इत्यनेन स्थानत आन्तर्यात् लृ इत्यस्य स्थाने ल् इति, अत्रापि लोपे प्राप्ते निषिद्धे सति अज्झीनं परेण संयोज्यं लाकृतिः इति रूपं सिद्धम् ॥ समसम्बन्धीति ॥ समानामिति यदि कर्मणि षष्ठी तर्हि स्थान्यादिभिः समसंख्यानां यत्र विधानं तत्रैव यथासंख्यमित्यस्य प्रवृत्तिः, यथा–"एचो ऽयवायावः" इत्यत्र न तु "समूलाकृतजीवेषु हन् कृञ् ग्रहः" इत्यत्र । तत्र विधेयस्य 'णमुल्' इत्यस्य एकत्वात् । अतः समानामिति सम्बन्धे षष्ठी इति भावः ॥ हरये इति ॥ हरे-ए इति स्थिते "एचो ऽयवायावः" इत्यनेन एच्प्रत्याहारघटकः हरे इत्यत्र रेफोत्तरवर्ती एकारः तस्य स्थाने अय

विष्णवे, नायकः, पावकः ॥ वान्तो यि प्रत्यये ।६।१।७९। यकारादौ प्रत्यये परे ओदौतोरवावौ स्तः । गव्यम्, नाव्यम् । ( अध्वपरिमाणे च )। गव्यूतिः ॥ अदेङ् गुणः ।१।१।२। अदेङ् च गुणसंज्ञः स्यात् ॥ तपरस्तत्कालस्य ।१।१।७०। तः परो यस्मात्स च तात्परश्चोच्चार्यमाणः समकालस्यैव संज्ञा स्यात् । आद्गुणः ६।१।८७। अवर्णादचि परे पूर्वपरयोरेको गुणादेशः स्यात् । उपेन्द्रः । गङ्गोदकम् ॥ उपदेशेऽजनुनासिक इत् ।१।३।२। उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात् । प्रतिज्ञानुनासिक्याः पाणिनीयाः । लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा ॥

---

आदेशो जातः ।अच्प्रत्याहारघटक एकारे परे । तेन 'हरय् ए' इति जाते । अज्झीनं परेण संयोज्यम्, हरये इति सिद्धम् ॥ विष्णवे इति । विष्णो ए इति स्थिते "एचोऽयवायावः" इत्यनेन अचि एकारे परे "विष्णो" शब्दस्यो य ओकारः तस्य स्थाने अव् आदेशः कृतः ॥ विष्णव् ए इति जाते मिलित्वा विष्णवे इति रूपं सिद्धम् ॥ नायक इति । नै-अकः अत्र आय् आदेशः, पौ-अकः अत्र आव् आदेशः "एचोऽयवायावः" इत्यनेन इति भावः ॥ यकारादाविति ॥ "यस्मिन्विधिस्तदादावल्ग्रहणे" इति परिभाषया तदादिविधानेन यकारादौ इत्यर्थस्य लाभः इति भावः ॥ गव्यमिति ॥ गोशब्दात् "गोपयसोर्यत्" इत्यनेन विकारार्थे यति प्रत्यये रूपम् ॥ अत्र गो-यम् इति स्थितौ ओकारस्य अच्परकत्वाभावात् "एचोऽयवायावः" इत्यनेन आवादेशाप्राप्तौ "वान्तो यि प्रत्यये" इत्यनेन यादिप्रत्ययः-य इति, तस्मिन् परे 'अव्' आदेशे कृते गव्यम् इति रूपं सिद्धम्॥ नाव्यमिति । 'नौ-यम्' इति स्थिते "वान्तो यि प्रत्यये" इत्यनेन यकारादौ प्रत्यये परे आव् आदेशे कृते 'नाव्यम्' इति भवति । नावा तार्यं नाव्यमित्यर्थः॥ अध्वपरिमाणे चेति ॥ मार्गपरिमाणे अर्थे गम्यमाने ओकारस्य स्थाने अव् आदेशो भवति यूति शब्दे परे । यथा-गो-यूतिः इत्यत्र "अध्वपरिमाणे च" इत्यनेन अवादेशे गव्यूतिः इति रूपं सिद्धम् ॥ "गव्यूतिः स्त्री क्रोशयुगम्" इत्यमरः । क्रोशयुगस्य संज्ञैषेति भावः । तः परः इति । तपरपदे बहुव्रीहितत्पुरुषसमासद्वयं व्याख्यानादतो वृत्तावाह-तः परो यस्मात्तात्परश्चेति ॥ आद्गुण इति । "इको यणचि" इत्यतो अचि इति "एकः पूर्वपरयोः" इति सम्पूर्णं सूत्रमनुवर्तते अत आह-अचि परे पूर्वपरयोरिति ॥ उपेन्द्र इति । उप-इन्द्र इति स्थिते अत्र "आद्गुणः" इति सूत्रेण पूर्वपरयोः अकार-इकारयोः स्थाने गुणसंज्ञकः कण्ठतालुस्थानकः एकारो जातः । तेन 'उपेन्द्रः' इति रूपं सिद्धम् ॥ गङ्गोदकमिति । गङ्गा-उदकम् इति स्थिते "आद्गुणः" इत्यनेन सूत्रेण पूर्वपरयोः आकार-उकारयोः स्थाने ओकारे कृते गङ्गोदकमिति सिद्धम् ॥ प्रतिज्ञेति । प्रतिज्ञायते इति प्रतिज्ञा । अनुनासिकस्य भावः आनुनासिक्यम् । प्रतिज्ञा आनुनासिक्यं येषान्ते प्रतिज्ञानुनासिक्याः । लण्सूत्र-स्थेति । 'लण्' सूत्रे तिष्ठतीति लण्सूत्रस्थः स, चासौ अवर्णश्च लण्सूत्रस्थावर्णः तेन सहो-

**उरण् रपरः** ।१।१।५१। ऋ इति त्रिंशतः संज्ञेत्युक्तं तत्स्थाने योऽण् स रपरः सन्नेव प्रवर्तते । कृष्णर्द्धिः, तवल्कारः ॥ **लोपः शाकल्यस्य** ।८।३।१९। अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोपो वाऽशि परे ॥ **पूर्वत्रासिद्धम्** ।८।२।१। तेन सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धम् । हर इह–हरयिह विष्ण इह–विष्णविह ॥ **वृद्धिरादैच्** ।१।१।१। आदैच्च वृद्धिसंज्ञः स्यात् । **वृद्धिरेचि** ६।१।८८। आदेचि परे वृद्धिरेकादेशः स्यात् । गुणापवादः । कृष्णै-

---

श्रूयमाणो रेफः 'र' इत्येवं रूपः रेफलकारयोस्संज्ञेत्यर्थः । उरणिति । उः इति 'ऋ' इत्यस्य षष्ठ्येकवचनम् । त्रिंशत इति । "अणुदित्सवर्णस्य चाप्रत्ययः" इत्यनेनेति भावः । त स्थाने इति । "स्थानेऽन्तरतमः" इत्यतः स्थानेग्रहणमनुवर्तते । "विधौ परिभाषोपतिष्ठते नानुवादे" इति परिभाषया "उरण् रपरः" इत्यत्र "षष्ठीस्थानेयोगा" इति परिभाषा नोपतिष्ठते इति भावः । रपरः सन्नेवेति । अत्र 'र' इति प्रत्याहारो ग्राह्यः । तेन रेफशिरस्कः लकारशिरस्कश्च प्रवर्तते । कृष्णर्द्धिरिति । कृष्ण–ऋद्धिः इति स्थिते अत्र "आद्गुणः" इति सूत्रेण कृष्ण इत्यस्य णकारोत्तरवर्तिः अकारः तस्मात् अचि परे, नाम ऋकारे परे पूर्वपरयोः–अकारऋकारयोः स्थाने गुणे प्राप्ते–गुणसंज्ञकाश्च "अदेङ्गुणः" इति सूत्रेण अ ए ओ इति । एषां त्रयाणां मध्ये कः कर्तव्यः ? एकारस्य तु कण्ठतालुस्थानं ओकारस्य कण्ठोष्ठस्थानं एतौ ए ओ इति न भवतः । आन्तरतम्याभावात् । किन्तु परिशेषात् अ एव भवति ! स च "उरण् रपरः" इति सूत्रेण रपरः (रेफशिरस्कः) सन् भवति । तेन कृष्णर्द्धिः इति रूपम् ॥ तवल्कार इति । 'तव–ऌकारः' इति स्थिते अत्र "आद्गुणः" इति सूत्रेण वकारोत्तरवर्तिः अकारः तस्य ऌकारस्य च उभयोः स्थाने अरूपगुणे "उरण् रपरः" इति सूत्रेण लपरे च कृते तवल्कारः इति रूपम्भवति ॥ लोपः शाकल्यस्येति । "भोभगो" इत्यतः अपूर्वस्येति अशीति चानुवर्तते । "व्योर्लघुप्रयत्न" इत्यतः व्योरित्यनुवर्तते अत आह–अवर्णेति । "पूर्वत्रासिद्धमिति । पाणिनिप्रणीता अष्टाध्यायी, तत्र अष्टमाध्याये द्वितीयपादस्येदमादिमं सूत्रम् । इतः प्राक्तनं कृत्स्नं सूत्रजालं सपादसप्ताध्यायीति व्यवह्रियते । उपरितनं तु कृत्स्नं सूत्रजालं त्रिपादीति व्यवह्रियते इति भावः ॥ हर इह इति । हरे इह इति स्थिते "एचोऽयवायावः" इत्यनेन अयादेशे कृते 'हरय इह' इति दशायाम् "लोपः शाकल्यस्य" इत्यनेन अवर्णपूर्वकपदान्ते वर्तमानस्य 'य्' इत्यस्य विकल्पेन लोपः अचि 'इ' इति परे । तेन हर इह इति जाते । अत्र शङ्कते–लोपानन्तरम् 'हर इह' इत्यत्र "आद्गुणः" इत्यनेन गुणः कथं न भवति ? उत्तरम्–"पूर्वत्रासिद्धम्" इत्यनेन सूत्रेण सपादसप्ताध्यायीस्थसूत्रदृष्ट्या–"आद्गुणः" इति सूत्रदृष्ट्या, त्रैपादिको "लोपः शाकल्यस्य" इति लोपोऽसिद्धः । तत्र यलोपे जातेऽपि यकारोऽस्तीति भावनया "आद्गुणः" इति सूत्रार्थो न घटते इति भावः । लोपाभावपक्षे–"हरयिह" इति । एवमेव 'विष्ण इह, विष्णविह' इत्यत्रापि

कत्वम् , गङ्गौघः देवैश्वर्यम्, कृष्णौत्कण्ठ्यम् ॥ एत्येधत्यूठ्सु ६।१।८६। अवर्णा-दजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात् । उपैति, उपैधते, प्रष्ठौहः । एजाद्योः किम् । उपेतः, मा भवान्प्रेदिधत् ॥ ( अक्षादूहिन्यामुपसंख्यानम् ) । अक्षौहिणी सेना । ( प्रादूहोढोढ्येषैष्येषु ) प्रौहः, प्रौढः, प्रौढिः, प्रैषः, प्रैष्यः ।

---

बोध्यम् । कृष्णैकत्वमिति । 'कृष्ण—एकत्वम्' इति स्थिते अत्र "वृद्धिरेचि" इत्यनेन अवर्णात्—कृष्णशब्दस्थणकारोत्तरवर्ति—अवर्णात्, एचि-एच्प्रत्याहारघटक—एकारे—"एकत्वम्" इति रूपस्थैकारे परे पूर्वपरयोः-'अ-ए' इत्यत्र वृद्धिसंज्ञकः-"वृद्धि-रादैच्" इति सूत्रेण—वृद्धिसंज्ञकेषु आ ऐ औ' इत्येतेषु "स्थानेऽन्तरतमः" इत्यनेन कण्ठस्थानिकाकारस्य कण्ठतालुस्थानीयैकारस्य च स्थाने कण्ठतालुसंज्ञकः आन्तरतम्य—ऐ आदेशो जातः, तेन कृष्णैकत्वमिति सिद्धम् । अनेनैव प्रकारेण गङ्गौघः, देवैश्वर्यम्, कृष्णौत्कण्ठ्यम् इति बोध्यम् । संक्षेपतस्तु गङ्गा—ओघः इति स्थिते अत्र "वृद्धिरादैच्" इति सूत्रेण पूर्वपरयोः आकारस्य ओकारस्य च स्थाने वृद्धि-संज्ञकः, आन्तरतम्यः औ आदेशः । तेन गङ्गौघः इति जायते । 'देव-ऐश्वर्यम्' इत्यत्र पूर्वपरयोः स्थाने ऐ आदेशो 'देवैश्वर्यम्' इति । कृष्ण-औत्कण्ठ्यम् इति स्थिते तत्र पूर्व-परयोः स्थाने औ आदेशो 'कृष्णौत्कण्ठ्यम्' इति सिद्धम्भवति ॥ उपैतीति । उप-एति इति स्थिते अत्र "एत्येधत्यूठ्सु" इत्यनेन अवर्णादेजादि इण्-धातु एध-धातु ऊठ्सु परेषु पूर्वपरयोः स्थाने वृद्धिरूपैकादेशो भवतीत्यर्थकेन, अवर्णात्—उप इत्यत्र पकारो-त्तरवर्ति-अवर्णात्, एजादि-इण् धातु-एति इति, परे पूर्वपरयोः-'अ-ए' इत्यत्र वृद्धि-संज्ञक आन्तरतम्य ऐ आदेशो जातः, तेन उपैति इति भवति । अत्र "एङि पररूपम्" इत्यनेन पररूपस्य प्राप्तिरासीत्, परं तत्सूत्रमपवादत्वात् "एत्येधत्यूठ्सु" इत्यनेन बाध्यते । एवम्—'उप एधते' इति स्थितौ "एत्येधत्यूठ्सु" इत्यनेन वृद्धौ सत्याम् 'उपैधते' इति रूपम् । 'प्रष्ठ—ऊहः' इति स्थिते अत्र "आद्गुणः" इत्यनेन गुणे प्राप्ते "एत्येधत्यूठ्सु" इत्यनेन प्रबाध्य वृद्धौ सत्यां रूपम् । 'उप-इतः, मा भवान् प्र इदि-धत्' इत्यत्र एजादिपरत्वाभावात्र वृद्धिः, किन्तु "आद्गुणः" इत्यनेन गुणे रूपम्—उपेतः इति, प्रेदिधत् इति च । अक्षौहिणीति । अत्र अक्ष—ऊहिनीति दशायाम् "आद्-गुणः" इत्यनेन गुणे प्राप्ते "अक्षादूहिन्यामुपसंख्यानम्" 'अक्षशब्दाद् ऊहिनीशब्दे परे वृद्धिः स्यात्' इत्यर्थकवार्तिकेन वृद्धौ-'अक्षौहिणी' इति । प्रादूहोढेति । प्रशब्दात् ऊह—ऊढ-ऊढि-एष-एष्यशब्दे परे पूर्वपरयोः स्थाने वृद्धिरूपैकादेशो भवति । तथाहि-प्र—ऊहः, प्र—ऊढः, प्र—ऊढिः, इत्यत्र पूर्वपरयोः स्थाने आन्तरतमो वृद्धिसंज्ञकः औकारो जातः तेन प्रौहः, प्रौढः, प्रौढिः, इति । प्र—एषः, प्र—एष्यः, इत्यत्र वृद्धिसंज्ञक आन्तरतम्य ऐ आदेशः । तेन प्रैषः, प्रैष्यः इति रूपम् । अत्र पूर्वोक्तरूपत्रये "आद्गुणः" इत्यस्य प्र—एषः, प्र—एष्यः इत्यत्र च "एङि पररूपम्" इत्यस्य प्राप्तिरासीत् तद्बाधनाय

( ऋते च तृतीयासमासे ) । सुखेन ऋतः सुखार्तः । तृतीयेति किम् । परमर्तः । ( प्रवत्सतरकम्बलवसनार्णदशानामृणे ) प्रार्णम्, वत्सतरार्णमित्यादि ॥ **उपसर्गाः क्रियायोगे** ।१।४।५९। प्रादय क्रियायोगे उपसर्गसंज्ञाः स्युः । प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप । एते प्रादयः ॥ **भूवादयो धातवः** ।१।३।१। क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः ॥ **उपसर्गादृति धातौ** ।६।१।९१। अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात् । प्रार्च्छति ॥ **एङि पररूपम्** ।६।१।९४। आदुपसर्गादेङादौ धातौ परे पररूपमेकादेशः स्यात् । प्रेजते, उपोषति ॥ **अचोऽन्त्यादि टि** ।१।१।६४। अचां मध्ये योऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात् । ( शकन्ध्वादिषु पररूपं वाच्यम् ) । तच्च टेः । शकन्धुः, कर्कन्धुः, मनीषा । आकृतिगणोऽयम् । मार्तण्डः ॥ **ओमाङोश्च** ।६।१।९५। ओमि आङि चात्परे पररूपमेकादेशः स्यात् ।

---

"आद्गुणः" इति वार्तिकमिति भावः । ऋते चेति । तृतीयासमासघटकावर्णात् ऋतशब्दे परे पूर्वपरयोः स्थाने वृद्धिरित्यर्थः । 'सुख–ऋतः' इति स्थिते अत्रावर्णात्–सुख इत्यत्र खकारोत्तरवर्ति–अवर्णात्, ऋतशब्दे परे पूर्वपरयोः 'अ ऋ' इत्यत्र वृद्धिसंज्ञक आकारे "उरण् रपरः" इत्यनेन रपरे सति प्रवृत्ते 'सुखार्तः' इति सिद्धम् । परमर्त इति । 'परम–ऋतः' इति स्थितेऽत्र तृतीयासमासाभावात् न वृद्धिः किन्तु "आद्गुणः" इति गुणे रपरे च रूपम् । प्रवत्सतरेति । प्र–वत्सतर–कम्बल–वसन–ऋण–दशानामवयवभूतादकारात् ऋणशब्दे परे पूर्वपरयोः स्थाने वृद्धिरूपैकादेशो भवतीत्यर्थः । प्र–ऋणं, वत्सतर–ऋणं, कम्बल–ऋणं, वसन–ऋणं, ऋण–ऋण, मिति स्थिते पूर्वपरयोः स्थाने आकाररूपवृद्धौ रपरे च प्रार्णम्, वत्सतरार्णम्, कम्बलार्णम्, वसनार्णम्, ऋणार्णम् इति भवतीत्यर्थः । प्रार्च्छतीति । 'प्र–ऋच्छति' इति स्थितेऽत्र ऋच्छतीत्यस्य क्रियावाचकत्वात् "भूवादयो धातवः" इत्यनेन धातुसंज्ञायाम् 'प्र' इत्यस्य क्रियायोगात् "उपसर्गाः क्रियायोगे" इत्यनेन उपसर्गसंज्ञायाम् "उपसर्गादृति धातौ" इत्यनेन पूर्वपरयोः स्थाने आरूपवृद्धौ रपरे च प्रार्च्छतीति सिध्यति । प्रेजत इति । 'प्र–एजते' इति स्थिते अत्र "वृद्धिरेचि" इत्यनेन वृद्धौ प्राप्तायां तां प्रबाध्य "एङि पररूपम्" इत्यनेन पूर्वपरयोः स्थाने पररूपैकादेशे 'ए' इत्याकारे कृते 'प्रेजते' इति रूपम् । एवम् 'उप–ओषति' इत्यत्रापि पूर्वपरयोः स्थाने पररूपे सति 'उपोषति' इति रूपं सिद्धम्भवति । शकन्धुरिति । 'शक–अन्धुः' इति स्थिते अत्र "अकः सवर्णे दीर्घः" इत्यनेन दीर्घे प्राप्ते तं बाधित्वा "शकन्ध्वादिषु पररूपं वाच्यम्" इत्यनेन पररूपे प्राप्ते तच्च पररूपं टेः–टिसंज्ञकस्य भवति । टिसंज्ञा च "अचोऽन्त्यादि टि" इत्यनेन ककारोत्तरवर्ति–अकारस्य भवति । एवञ्च "शक–अन्धुः" इत्यत्र पूर्वपरयोः स्थाने पररूपे सति 'शकन्धुः' इति भवतीति भावः । एवमेव

शिवायोंनमः, शिव एहि, **अन्तादिवच्च** ।६।१।८५। योऽयमेकादेशः स पूर्वस्यान्तवत्परस्यादिवत् । शिवेहि ॥ **अकः सवर्णे दीर्घः** ।६।१।१०१। अकः सवर्णेऽचि परे पूर्वपरयोर्दीर्घ एकादेशः स्यात् दैत्यारिः, श्रीशः, विष्णूदयः, होतॄकारः ॥ **एङः पदान्तादति** ।६।१।१०६। पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात् । हरेऽव, विष्णोऽव ॥ **सर्वत्र विभाषा गोः** ।६।१।१२२। लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभाव पदान्ते । गोअग्रम्—गोऽग्रम् । एङन्तस्य किम् ? चित्रग्वग्रम् । पदान्ते किम् ! गोः ॥ **अनेकाल्शित्सर्वस्य** ।१।१।५५। इति प्राप्ते ॥ **ङिच्च** ।१।१।५३। ङिदनेकालप्यन्त्यस्यैव स्यात् ॥ **अवङ् स्फोटायनस्य** ।६।१।१२३। पदान्ते एङन्तस्य

---

'कर्क-अन्धुः' इत्यत्र "अचोऽन्त्यादि टि" इत्यनेन टिसंज्ञायाम् "शकन्ध्वादिषु पररूपं वाच्यम्" इत्यनेन पररूपे 'कर्कन्धुः' इति भवति । 'मनस्-ईषा' इति स्थितेऽत्र "अचोऽन्त्यादि टि" इत्यनेन सूत्रेण 'अस' इत्यस्य टिसंज्ञायाम् पररूपे च 'मनीषा' इति सिध्यति । मार्त-अण्डः' इति स्थिते प्रकृतवार्तिकेन पररूपे 'मार्तण्डः' इति जायते । शिवायों नम इति । 'शिवाय-ओं नमः अत्र "ओमाङोश्च" इत्यनेन अवर्णात् ओमि परे पूर्वपरयोः स्थाने पररूपे 'शिवायों नमः' इति भवति । शिवेहीति । 'शिव-आ-इहि' इति स्थिते अत्र "धातूपसर्गयोः कार्यमन्तरङ्गम्" इति परिभाषया पूर्वम् 'आ-इहि' इत्यत्र "आद्गुणः" इत्यनेन गुणे एहीति जाते तत्र "अन्तादिवच्च" इत्यनेन सूत्रेण अन्तवद्भावमादाय "ओमाङोश्च" इत्यनेन पररूपे कृते सति 'शिवेहि' इति रूपसिद्धिर्बोध्या । दैत्यारिरिति । दैत्यानामसुराणाम् अरिः शत्रुरिति विग्रहः । सिद्धिप्रकारस्तु—'दैत्य-अरिः' इतिस्थिते अत्र "अकः सवर्णे दीर्घः" इत्यनेन सूत्रेण सवर्णेऽचि-अकारे परे पूर्वपरयोः स्थाने सवर्णदीर्घादेशे कृते सति 'दैत्यारिः' इति भवति । 'श्री-ईशः' अत्रापि "अकः सवर्णे दीर्घः" इत्यनेन पूर्वपरयोः-'ई-ई' इति स्थाने, सवर्णदीर्घादेशे 'श्रीशः' इति भवति । एवमेव 'विष्णु-उदयः' इति स्थिते प्रकृतसूत्रेण सवर्णदीर्घादेशे 'विष्णूदयः इति रूपम् । हरेऽवेति । 'हरे-अव' इति स्थिते, अत्र "एङः पदान्तादति" को वात्र पदान्ते एङ् ? रेफान्तःपात्येकारः पदान्ते एङ्, ततः परः को वा अकारः ? अवेत्यस्याकारः, अत्र पूर्वपरयोः स्थाने पूर्वरूपादेशः प्राप्तः । को वा पूर्वः ? एकारः, तस्मिन् जाते सति 'हरेऽव' इति रूपम्भवति । एवमेव 'विष्णो-अव' इति स्थिते अत्र "एङः पदान्तादति" इत्यनेन सूत्रेण पूर्वपरयोः स्थाने पूर्वरूपैकादेशे सति 'विष्णोऽव' इति रूपम् । गो अग्रमिति । 'गो-अग्रम्' इति स्थिते अत्र "सर्वत्र विभाषा गोः" इत्यनेन पदान्ते विद्यमानस्य एङन्तस्य गोशब्दस्य अति परे विकल्पेन प्रकृतिभावे सति 'गोअग्रम्' इति रूपम् । विभाषाग्रहणात्पक्षे "एङः पदान्तादति" इत्यनेन पूर्वरूपैकादेशे कृते 'गोऽग्रम्' इति रूपम् । चित्रग्वग्रमिति । 'चित्रगु अग्रम्' इति दशायां तत्र एङन्तत्वाभावात् न पूर्वरूपम् । नापि प्रकृतिभावः । किन्तु "इको यणचि" इत्यनेन यणि

गोरवङ् वाऽचि । गवाग्रम्—गोऽग्रम् । पदान्ते किम्? गवि ॥ **इन्द्रे च** ।६।१।१ गोरवङ् स्यादिन्द्रे । गवेन्द्रः ॥ **दूराद्धूते च** ।८।२।८४। दूरात्सम्बोधने वाक्य टेः प्लुतो वा ॥ **प्लुतप्रगृह्या अचि नित्यम्** ।६।१।१२५। एतेऽचि प्रकृत्या आगच्छ कृष्ण३ अत्र गौश्चरति ॥ **ईदूदेद्द्विवचनं प्रगृह्यम्** ।१।१।११। ईदूदे द्विवचनं प्रगृह्यसंज्ञं स्यात् । हरी एतौ, विष्णू इमौ, गङ्गे अमू ॥ **अदसो** ।१।१।१२। अस्मात्परावीदूतौ प्रगृह्यौ स्तः । अमी ईशाः, रामकृष्णावमू आसा मात्किम्? अमुकेऽत्र ॥ **चादयोऽसत्त्वे** ।१।४।५७। अद्रव्यार्थाश्चादयो नि

---

रूपम् । पदान्ते किमिति । गोशब्दात् ङसि प्रत्यये कृते ङकारेकारयोर्लोपे 'गो-अस्' इ दशायां पदान्तत्वाभावात् न प्रकृतिभाव इति भाव । सूत्रे पदान्तत्वानाश्रयणे तु प्रकृतिभाव आपद्येतेति भाव । प्रकृते "गो-अस्" इत्यत्र "ङसिङसोश्च" इत्यने रूपादेशे सति 'गोः' इति रूपम् । गवाग्रमिति । 'गो-अग्रम्' इति दशायाम् "अव स्फोटायनस्य" इत्यनेन पदान्ते विद्यमानस्य एङन्तस्य 'गो' इत्यस्य अवङादेश अचि-अग्रमेतदवयवाकारे परे । स अवङादेशः कुत्र स्यात्? अवङि अनेकाल्त्वात् कालशित् सर्वस्य" इत्यनेन सर्वादेशे प्राप्ते "ङिच्च" इत्यनेन ङिदादेशस्याऽनेक अपि अन्त्यादेश इति गोशब्दस्य गकारोत्तरवर्ति-ओकारस्य अनुबन्धलोपपूर्वके देशे 'गव-अग्रम्' इति जाते "अकः सवर्णे दीर्घः" इत्यनेन दीर्घे 'गवाग्रम्' रूपमवाप्ते । अत्रायं विचारः—"सर्वत्र विभाषा गोः" इत्यनेन प्रकृतिभावो विक भवति । तदभावे अवङादेशो विकल्पेन । तदभावे च पूर्वरूपमिति गो अग्रम् ग्रम् गोऽग्रम्, इति रूपत्रयम् । गवेन्द्र इति । 'गो-इन्द्र' इति स्थितेऽत्र "इन्द्रे इत्यनेन गोशब्दस्य गकारोत्तरवर्त्योकारस्य अवङादेशे सवर्णदीर्घे च सति रूप आगच्छ कृष्णेति । 'आगच्छ कृष्ण ३ अत्र गौश्चरति' इति वाक्ये 'कृष्ण-अत्र' इ "दूराद्धूते च" इत्यनेन सूत्रेण टिसंज्ञकस्य णकारोत्तरवर्त्यकारस्य प्लुतत्वं विधाय "प्लु तप्रगृह्या अचि नित्यम्" इत्यनेन प्रकृतिभावे 'आगच्छ कृष्ण ३ अत्र गौश्चरति' सिध्यति । हरी एताविति । 'हरी—एतौ' इत्यत्र "ईदूदेद् द्विवचनं प्रगृह्यम्" इ सूत्रेण प्रगृह्यसंज्ञायाम् "प्लुतप्रगृह्या अचि नित्यम्" इत्यनेन प्रकृतिभावे 'हरी एतौ' निष्पन्नम् । एवमेव 'विष्णू-इमौ' 'गङ्गे-अमू' इत्यत्र क्रमेण ऊकारान्तैकारान्तद्विव त्वात् "ईदूदेद् द्विवचनम" इत्यनेन प्रगृह्यसंज्ञायां प्रकृतिभावे च 'विष्णू इमौ' 'गङ्गे इति भवति । अदसो मादिति । अदसः इत्यवयवषष्ठी, तेन अदश्शब्दावयवमकारात्प वीदूतौ प्रगृह्यसंज्ञौ स्तः । 'अमी-ईशाः' इत्यत्र अदश्शब्दावयवमकारात्परस्येकारस्य सत्त्वात्प्रगृह्यसंज्ञायाम् "प्लुतप्रगृह्या अचि नित्यम्" इत्यनेन प्रकृतिभावे 'अमी ईशाः' इति रूपम् । एवमेव 'रामकृष्णावमू-आसाते' इत्यत्रापि प्रगृह्यसंज्ञां कृत्वा प्रकृतिभावो विधेयः । मात् किमिति । असति मात्ग्रहणे एकारोऽप्यनुवर्तेत । तेन च 'अमुकेऽत्र'

ायूँतौ' इत्यत्र छकारोद्वा पूर्वभागे 'लोपो व्योः' ( सू ८७३ ) इति लोपेन वकारः लुप्यते । तेन श्रूयमाणवकारान्त आदेशः स्यात् । 'वकारो न लुप्यत इति यावत् । ६४ धातोस्तन्निमित्तस्यैव ६।१।८०॥ यादौ प्रत्यये परे

ते, व् छन्दसीति च वकारः कुतो न श्रूयत इत्यत आह—लोपो व्योरिति लोपेनेति । सहित इति शेषः । ननु प्रश्लेषे सति किमायातमित्यत आह—तेनेति । वान्तो य सूत्रे वकारात् प्राक् व् इति प्रश्लिष्यमाणं वान्तस्य विशेषणम् । विशेषणत्वाच्च विधौ सति वकारान्त इति लभ्यते । तत्र वान्तस्य पुनर्वान्तत्ववचनसामर्थ्यात् ाणवकारवान् वान्त आदेशः स्यादिति लभ्यते । गोर्यूतावित्यत्र च इदमेव ग्रहणमनुवर्तते इति तत्रापि श्रूयमाणवकारवान् वान्तादेश इति लभ्यते । गोर्यू- त्यत्र छकारात् प्राक् व् इति प्रश्लिष्यमाणमपि पूर्वसूत्रादनुवृत्तस्य वान्त विशेषणमिति । तदन्तविधिना वान्तत्वलाभे वान्तस्य पुनर्वान्तत्ववचनसाम- ् श्रूयमाणवकारवान् इति लभ्यते इत्यर्थः । नन्वेतावता गव्यूतिरित्यत्र अवादेशे रस्य श्रूयमाणत्वलाभेऽपि लोपशङ्का न परिहृतेत्यत आह—वकारो न लुप्यत इति तेति । वकारस्य श्रूयमाणत्ववचनं वकारो न लुप्यत इत्यर्थे पर्यवसन्नमित्यर्थः, ाणस्यैव लोपशब्दार्थत्वादिति भावः । यद्यपि वान्तो यीति सूत्रे वकारप्रश्लेषस्य हरणे गव्यं नाव्यमित्यत्र प्रयोजनं नास्ति, तत्र भत्वेन पदत्वस्य बाधेन वलो ाप्तेः । लव्यमित्यादौ स्वत एव पदत्वाभावाल्लोपस्याप्राप्तिः । गामिच्छति ीत्यत्र क्यजन्तेऽपि वकारस्य न लोपप्रसक्तिः, 'नः क्ये' इति नियमेन तत्र पद- त्वाभावात् । तथापि गोर्यूताविति वार्तिके तदनुवृत्तौ गव्यूतिरित्यत्र प्रयोजनम- स्त्येव । एवं च वार्तिक एव तत्प्रश्लेष उचितः । एतस्मादेवास्वरसात् छकारादित्यु- क्तम् । वस्तुतस्तु वकारप्रश्लेषोऽनुपपन्नः, तथा सति सूत्रे वार्तिके च प्रश्लिष्टस्य तस्य गप्रसङ्गात् । न च लोपो व्योरिति लोपात्तदश्रवणमिति वाच्यम्, वकारलोपस्य णाभावाद्वकारग्रहणं न कर्तव्यमिति लोपो व्योरिति सूत्रस्थभाष्यविरोधात् । ऽत्र प्रश्लिष्टवकारस्य छान्दस एव लोपो वर्णनीयः । प्रक्रियाप्रकाशे तु 'संज्ञापूर्वको निस्य' इति वचनात् गव्यूतिरित्यत्र न वकारलोप इत्युक्तम् । अन्ये तु 'इको वृद्धौ' इति सूत्रे अतो लान्तस्येत्यत्र लुप्तनिर्दिष्टो वकार इति भाष्यप्रामाण्यात् स्मिन् वकारलोप इत्याहुः ।

ननु ओयते औयत इत्यत्रापि ओकारस्य औकारस्य च वान्तो यीति वान्तादेशः स्यादित्याशङ्क्य वान्तो यीति सूत्रं नियमयति—धातोस्तन्निमित्तस्यैव । एव इति, वान्तो

१. वार्तिकेन लोपाभावोऽपि निपात्यते । 'बाधकान्येव निपातनानि' इति सर्वनामसंज्ञा सूत्रे भाष्ये स्पष्टम् ।

धातोरेचश्चेद्वान्तादेशस्तर्हि तन्निमित्तस्यैव, नान्यस्य। लव्यम्। अवश्यलाव्यम्। 'तन्निमित्तस्यैव' इति किम्। ओयते। औयत। ६५ क्षय्यजय्यौ शक्यार्थे ६।१।८१॥ यान्तादेशनिपातनार्थमिदम्। क्षेतुं शक्यं क्षय्यम्।

---

यि प्रत्यय इति चानुवर्तते। सः यादिप्रत्ययः निमित्तं यस्य सः तन्निमित्तः। यादिप्रत्यये परे धातोरेचो भवन् वान्तादेशः यादिप्रत्ययनिमित्तकस्यैव एचो भवति, नान्यस्येत्यर्थः। तदाह—यादौ प्रत्यय इत्यादिना। लव्यमिति। लूञ्—छेदने। अचो यत्। सार्वधातुकार्धधातुकयोरित्यूकारस्य गुणः ओकारः। तस्य धात्ववयवत्वात् यादिप्रत्ययनिमित्तकत्वाच्च वान्तादेशः। अवश्यलाव्यमिति। 'ओरावश्यके' इति लूञो ण्यत्। अचो ञ्णितीत्यूकारस्य वृद्धिः औकारः। अवश्यमित्यव्ययम्। मयूरव्यंसकादित्वात्समासः। 'लुम्पेदवश्यमः कृत्ये' इति मलोपः। अत्र औकारस्य धात्ववयवत्वात् यादिप्रत्ययनिमित्तकत्वाच्च वान्तादेशः। ननु लव्यमवश्यलाव्यमित्यत्र वान्तो यीत्येव वान्तादेशः सिद्धः। अतस्तन्निमित्तस्यैवेति नियमार्थमिदं सूत्रमिति स्थितिः। तन्नियमविधेः किं प्रयोजनमिति पृच्छति—तन्निमित्तस्यैवेति किमिति। नियमस्य किंप्रयोजनमित्यर्थः। ओयते इति। वेञ्—तन्तुसन्ताने। कर्मणि लट्। भावकर्मणोरित्यात्मनेपदम्। यक्। 'वचिस्वपियजादीनाम्' इति वकारस्य सम्प्रसारणम् उकारः। पूर्वरूपम्। 'अकृत्सार्वधातुकयोः' इत्युकारस्य दीर्घः। आङा सह ऊकारस्य 'आद्गुणः' इति गुणः ओकारः। तस्य परादिवद्भावेन धात्ववयवत्वेऽपि यादिप्रत्ययनिमित्तकत्वाभावात् न वान्तादेशः। नन्वत्र न धातुलोप इत्यस्यभाष्यरीत्या 'आद्गुण' इति गुणस्य ओकारस्य पदद्वयापेक्षत्वेन बहिरङ्गतया वान्तादेशे कर्तव्ये असिद्धत्वादोकाराभावाच्च वान्तादेशप्रसक्तिरित्यस्वरसादाह—औयतेति। वेञः केवलात् कर्मणि लङ्। आत्मनेपदादि पूर्ववत्। 'आडजादीनाम्' इत्याट्। 'आटश्च' इति वृद्धिः औकारः। तस्य परादिवद्भावेन धात्ववयवत्वेऽपि यादिप्रत्ययनिमित्तकत्वाभावान्न वान्तादेशः। नात्र वृद्धेर्बहिरङ्गत्वम् पदद्वयापेक्षत्वाभावात्। 'सिद्धे सत्यारम्भो नियमार्थः' इति न्यायेन नियमविधिसिद्धेः तन्निमित्तस्यैवेत्येवकारस्तु विपरीतनियमव्यावृत्त्यर्थः। एवकाराभावे हि 'यादिप्रत्ययनिमित्तकस्य चेदेचो वान्तादेशस्तर्हि धातोरेवैचः' इत्यपि नियमः प्रतीयेत। तथा च बाभ्रव्य इत्यत्र वान्तादेशो न स्यात्। बभ्रोरपत्यं बाभ्रव्यः 'मधुबभ्र्वोर्ब्राह्मणकौशिकयोः' इति यञ्। 'ओर्गुणः' इत्युकारस्य गुणः ओकारः। तस्य यादिप्रत्ययनिमित्तकस्य धात्ववयवत्वाभावात् वान्तादेशो न स्यात्। अतः इष्टनियमावधारणार्थं तन्निमित्तस्यैवेत्येवकारः।

क्षय्यजय्यौ शक्यार्थे। शक्यार्थे क्षय्यजय्यशब्दौ वाचकतया वर्तेते इत्यर्थः। ननु किमपि कार्यं विधेयमत्र न दृश्यते इत्यत आह—यान्तेति। प्रातिस्विकविधिं विना सिद्धप्रक्रियस्य शब्दस्वरूपस्य निर्देशो निपातनात्। ततश्च शक्यार्थके यादौ प्रत्यये

जेतुं शक्यं जय्यम् । 'शक्यार्थे' किम् । क्षेतुं योग्यं क्षेयं पापं जेयं मनः ।
६६ क्रय्यस्तदर्थे ६।१।८२॥ तस्मै प्रकृत्यर्थायेदं तदर्थम् । क्रेतारः क्रीणीयुरिति बुद्ध्या आपणे प्रसारितं क्रय्यम् । क्रेयमन्यत् । क्रयणार्हमित्यर्थः ।
६७ लोपः शाकल्यस्य ८।३।१९॥ अवर्णपूर्वयोः पदान्तयोर्यवयोर्वा लोपोऽशि

---

परे क्षि-क्षये जि-जये इति धातोरेचः अय इति यान्तादेशः स्यादिति विधानमत्र फलति । शक्यार्थे क्षिज्योर्यान्त इति प्रातिस्विकविधौ गौरवादेवं निपातनमिति भावः । क्षय्यमिति । 'कृत्याः' इत्यधिकारे क्षिधातोरचो यदिति यत्प्रत्ययः । स च 'शकि लिङ् च' इति शक्यार्थः । शक्यार्थे लिङ् स्यात् चात् कृत्या इति तदर्थः । 'सार्वधातुकार्धधातुकयोः' इति इकारस्य गुणः एकारः । तस्य वपरकत्वाभावादप्राप्तः अयादेशः अत्र निपात्यते । जय्यमित्यपि पूर्ववत् । शक्यार्थे किमिति । शक्यार्थे इत्यस्य किं प्रयोजनमिति प्रश्नः । क्षेतुमित्यादि । क्षेतुं योग्यं क्षेयं पापम् । जेतुं योग्यं जेयं मन इत्यन्वयः । अर्हे कृत्यतृचश्चेति यत् । स च न शक्यार्थक इति नात्र यान्तादेश इत्यर्थः । क्रय्यस्तदर्थे । इदमपि यान्तादेशनिपातनार्थम् । तदर्थशब्दं व्याचष्टे—तस्मा इति । क्रय्यशब्दे यः क्रीञ्धातुः यत्प्रत्ययप्रकृतिभूतः तस्य योऽर्थः अभिधेयः द्रव्यविनिमयरूपः क्रयः सः प्रकृत्यर्थः तच्छब्देन विवक्षितः । तस्मै इदं तदर्थं क्रयार्थं वस्तु । तथा च क्रयार्थं वस्तुनि गम्ये क्रीञ्धातोर्यादौ प्रत्यये परे इति फलति । यान्तः क्रीञस्तदर्थ इति विधौ गौरवान्निपातनमाश्रितम् । क्रयार्थत्वं चात्र फलोपधायकं विवक्षितमित्याह—क्रेतार इत्यादि क्रय्यमित्यन्तम् । योग्यतामात्रग्रहणे तु तदर्थे इत्यव्यावर्तकं स्यादिति भावः । क्रीञः कर्मणि 'अचो यत्' इति यत्' इति यत् । सार्वधातुकेति गुणः एकारः । अत्र एकारस्य वपरकत्वाभावादनेन अयादेशविधिः । क्रेयमन्यदिति । गृहादौ भोजनाद्यर्थं सङ्गृहीतं धान्यादीत्यर्थः । 'अर्हे कृत्यतृचश्च' इति यत् ; अत्र अयादेशो न भवति, फलोपधानस्य क्रयार्थत्वस्य तत्राभावादित्यर्थः ।

हरे एहि, विष्णो इह, श्रियै उद्यतः, गुरौ उत्कः, इत्यत्र पूर्वां क्रमेण अयवायावादेशेषु कृतेषु यकारवकारयोर्वैकल्पिकं लोपं विधत्ते—लोपः शाकल्यस्य । 'भो भगो' इत्यतः 'अपूर्वस्येति अशीति चानुवर्तते । व्योर्लघुप्रयत्नेत्यतः व्योरित्यनुवर्तते । वकारयकारयोरित्यर्थः । अपूर्वस्येति च व्योरित्यस्य विशेषणम् । अवर्णः पूर्वो यस्मात् सः अपूर्वः । अपूर्वस्य वस्य यस्य चेति प्रत्येकमन्वयाभिप्रायमेकवचनम् । पदस्येत्यधिकृतम् । अवर्णपूर्वकाभ्यां यकारवकाराभ्यां विशेष्यते । विशेषणत्वाच्च व्योरिति तदन्तता लभ्यते । ततश्च अवर्णपूर्वो यः वकारो यकारश्च तदन्तपदस्य लोपः स्यात् अशि परत इत्यर्थः । अलोऽन्त्यपरिभाषया तादृशपदान्तस्येति लभ्यते । शाकल्यग्रहणान्मतान्तरे न भवतीति गम्यते । ततश्च फलितमाह—अवर्णपूर्वयोरित्यादिना ।

परे । 'पूर्वत्रासिद्धम्' ( सू १२ ) इति लोपशास्त्रस्यासिद्धत्वान्न स्वरसन्धिः । हर एहि—हरयेहि । विष्ण इह—विष्णविह । श्रिया उद्यतः—श्रियायुद्यतः । गुरा उत्कः—गुरावुत्कः । 'कानि सन्ति' 'कौ स्तः' इत्यत्रास्तेरल्लोपस्य स्थानिवद्भावेन यणावादेशौ प्राप्तौ 'न पदान्त' ( सू ५१ ) इति सूत्रेण पदान्तविधौ तन्निषेधान्न स्तः । ६८

---

व्योरित्यनुवृत्तावपि वर्णसमाम्नाये वकारस्य प्राथम्यात् वयोरित्युक्तम् । न च शाकल्यवंश्यानामेव पुरुषाणामेतल्लोपानुसरणं नान्येषामिति पुरुषभेदेन व्यवस्थार्थमेव शाकल्यग्रहणं कुतो न स्यादिति वाच्यम्, 'न वेति विभाषा' इति सूत्रभाष्ये आचार्यदेशशीलने न तद्विषयतेति प्रस्तुत्य 'इको ह्रस्वोऽङ्यो गालवस्य' 'प्राचामवृद्धात्' इत्यादौ गालवाद्याचार्यग्रहणं प्राचामुदीचामित्यादिदेशविशेषग्रहणं च अविशेषेण विकल्पार्थमेव, न तु तत्तद्व्यक्तितत्तद्देशभेदेन प्रयोगव्यवस्थार्थमिति सिद्धान्तितत्वात् । ननु हरे एहीत्यत्र अयादेशे यकारस्य लोपे सति 'ओमाङोश्च' इति पररूपं स्यात् । विष्णो इह, श्रियै उद्यतः, गुरौ उत्कः इत्यत्र अवायावादेशेषु वकारयकारलोपे 'आद्गुण' इति गुणः स्यादित्यत आह—पूर्वेति । वकारयकारयोर्लोपस्यासिद्धत्वेन ताभ्यां व्यवहिततया अच्परकत्वाभावादाशङ्कितः अच्सन्धिर्न भवतीत्यर्थः ।

तदेवमिक्सन्धिरेच्सन्धिश्च निरूपितः । तदुभयत्रातिप्रसङ्गमाशङ्क्य समाधत्ते—कानीत्यादिना । यद्यपि तथापीत्यध्याहार्यम् । कानि सन्ति, कौ स्तः इत्यत्र यद्यपि यणावादेशौ प्राप्तौ तथापि न भवत इत्यन्वयः । नन्वत्र इकारौकारयोः सकारपरकत्वादच्परकत्वाभावात् कथं यणावोः प्राप्तिरित्यत आह—अस्तेरल्लोपस्य स्थानिवद्भावेनेति । असधातोरादादिकाल्लटि प्रथमपुरुषबहुवचने 'सन्ति' इति रूपम् । प्रथमपुरुषद्विवचने तु 'स्तः' इति रूपम् । उभयत्रापि 'श्नसोरल्लोपः' इति धात्वादेरकारस्य लोप इति स्थितिः । तत्र अल्लोपस्य स्थानिवत्त्वेनाच्त्वादिकारौकारयोरच्परकत्वाद्यणावादेशौ प्राप्नुत इत्यर्थः । न च स्थानिवदादेशोऽनल्विधाविति स्थानिवद्भावोऽत्र न सम्भवति, अल्लोपस्य स्थानिभूतो यः अकारः तं परं निमित्तत्वेनाश्रित्य प्रवर्तमानयोर्यणावादेशविध्योः स्थान्यलाश्रयत्वादिति वाच्यम्; 'अचः परस्मिन् पूर्वविधौ' इति स्थानिवद्भावोपपत्तेः अल्लोपस्य क्ङिति परे विधीयमानस्य परनिमित्तकाजादेशतया तत्स्थानीभूतादकारात् पूर्वत्वेन दृष्टयोरिकारौकारयोर्यणावादेशविधौ अचः परस्मिन्निति प्रवृत्तेरिति भावः । तर्हि कुतोऽत्र यणावादेशौ न भवतः? इत्यत आह—न पदान्तेति सूत्रेण पदान्तविधौ तन्निषेधादिति । पदान्तभूतेकारौकारयोः स्थाने भवतोर्यणावादेशयोः पदचरमावयवतया तयोः कर्तव्ययोः परनिमित्तकस्याजादेशस्याल्लोपस्य स्थानिवत्त्वनिषेधादित्यर्थः ।

एकः पूर्वपरयोः ६।१।८४॥ इत्यधिकृत्य । ६९ आद्गुणः ६।१।८७॥ अवर्णादचि परे पूर्वपरयोरेको गुण आदेशः स्यात्संहितायाम् । उपेन्द्रः । रमेशः । गङ्गोदकम् । ७० उरण् रपरः १।१।५१॥ 'ऋ इति त्रिंशतः संज्ञा' इत्युक्तम्, तत्स्थाने योऽण् स रपरः सन्नेव प्रवर्तते तत्रान्तरतम्यात् 'कृष्णर्द्धिः' इत्यत्र

---

अथ एकादेशसन्धिं निरूपयितुमाह—एकः पूर्वपरयोः । इत्यधिकृत्येति । पदद्वयात्मकमिदं सूत्रम् उत्तरत्रानुवृत्त्यर्थं पठित्वा कतिपयसन्धयो विधास्यन्त इत्यर्थः । आद्गुणः । आदिति पञ्चमी, नतु तपरकरणम् । एकः पूर्वपरयोरित्यधिकृतम् । तदाह—अवर्णादचीत्यादिना । उपेन्द्र इति । उप इन्द्र इति स्थिते पकारादकारस्य तस्मादिकारस्य च पूर्वपरयोः कण्ठतालुस्थानकयोः तथाविध एको गुणः एकारः, आन्तरतम्यात् अथ प्रत्याहारेषु स्ववाच्येषूक्तां लक्षणां स्मारयितुं दीर्घविषयोदाहरणमाह—रमेश इति । रमा ईश इति स्थिते आकारस्य ईकारस्य च स्थाने पूर्ववदेको गुणः एकारः । गङ्गोदकमिति । गङ्गा उदकमिति स्थिते आकारस्य उकारस्य च कण्ठोष्ठस्थानकयोस्तथाविध एको गुणः ओकारः । कृष्णर्द्धिरित्यत्र कृष्ण ऋद्धिरिति स्थिते 'आद्गुणः' इति प्राप्तम् । अत्र अकारः ऋकारश्चेति द्वौ स्थानिनौ । तयोः अकार एकार ओकारश्चेति त्रयोऽपि गुणाः प्रसक्ताः, अकारेण स्थानिना त्रयाणामपि कण्ठस्थानसाम्याविशेषात् । ऋकारेण स्थानिना तु न कस्यापि स्थानसाम्यम्, तस्य मूर्धस्थानकत्वात् एतेषां च तदभावात् । एवं तव लृकार इति स्थिते त्रयो गुणाः प्रसक्ताः, अकारेण तेषां कण्ठस्थानसाम्याविशेषात् । लृकारेण तु स्थानिना न कस्यापि स्थानसाम्यम्, तत्र कतमो गुणो भवतीत्याकाङ्क्षायामिदमारभ्यते—उरण् रपरः । इत्युक्तमिति । अणुदित्सूत्रे इति शेषः । उः इति ऋ इत्यस्य षष्ठ्येकवचनम् । 'षष्ठी स्थाने' इति परिभाषया स्थाने इति लभ्यते । अनुवादे तत्परिभाषानुपस्थितावपि स्थाने ग्रहणं ततोऽनुवर्तते । तदाह—तत्स्थाने योऽणिति । 'स्थानेऽन्तरतमः' इत्यतोऽपि स्थानेग्रहणमनुवर्तते । स्थानं प्रसङ्ग इत्युक्तम् । प्रसङ्गावस्थायामित्यर्थो विवक्षितः । तदाह—रपरः सन्नेव प्रवर्तत इति । अत्र र इति प्रत्याहारो विवक्षितः । ततश्च रेफशिरस्को लकारशिरस्कश्च प्रवर्तत इति लभ्यते । तयोर्व्यवस्थां दर्शयति—तत्रेति । रेफलकारशिरस्कयोर्मध्ये कृष्णर्द्धिरित्यत्र अर्, तवल्कार इत्यत्र अलित्यन्वयः । कुत इयं व्यवस्थेत्यत आह—आन्तरतम्यादिति । त्रिषु गुणेषु प्रसज्यमानेषु अकारस्य अणो रेफलकारशिरस्कतया तस्य अर् अल् इत्येवमात्मकस्य अकारांशे स्थानीभूतेन अकारेण रेफांशे ऋकारेण, लकारांशे लृकारेण च स्थानसाम्यादकारऋकारयोः स्थाने अरेव भवति । अकारलृकारयोः स्थाने अलेव भवति । एकारौकारौ तु गुणौ न भवत एव, तयोः ऋकारेण लृकारेण च स्थानसाम्याभावादित्यर्थः । न च एकार ओकारश्च कथं

अर्। 'तवल्कारः' इत्यत्र चल्। अचो रहाभ्याम्—( सू ५१ ) इति पक्षे द्वित्वम्।
७१ झरो झरि सवर्णे ८।४।६५॥ हलः परस्य झरो लोपो वा स्यात्सवर्णे झरि। द्वित्वाभावे लोपे सत्येकधम्। असति लोपे, द्वित्वलोपयोर्वा द्विधम्। सति द्वित्वे लोपे चासति त्रिधम्। कृष्णर्धिः—कृष्णर्द्धिः—कृष्णर्द्धिः। 'यण इति पञ्चमी मय इति षष्ठी' इति पक्षे ककारस्य द्वित्वम्। लस्य तु 'अनचि च' ( सू ४८ ) इति। तेन 'तवल्कारः' इत्यत्र रूपचतुष्टयम्।

द्वित्वं लस्यैव कस्यैव नोभयोरुभयोरपि।
तवल्कारादिषु बुधैर्बोध्यं रूपचतुष्टयम्॥

---

रपरौ न स्यातामिति वाच्यम्, पूर्वेणैव णकारेण ग्रहणाण् गृह्यते, प्रशास्तॄणामित्यादिनिर्देशादित्यलम्। पक्षे द्वित्वमिति। ऋधेर्धातोः क्तिनि झषस्तथोरिति तकारस्य धत्वे ऋद्धिरिति द्विधकारं रूपं स्वाभाविकम्। तत्र अरादेशे रेफात् परस्य धकारस्य अचो रहाभ्यामिति कदाचिद् द्वित्वमित्यर्थः। झरो झरि सवर्णे। 'झयो होऽन्यतरस्याम्' इत्यतः अन्यतरस्यामित्यनुवर्तते। हलो यमामित्यतः हल इति, लोप इति चानुवर्तते। तदाह—हलः परस्येत्यादिना। तदिह रूपत्रयं सम्पन्नमित्याह—द्वित्वाभाव इत्यादिना। रेफात् परस्य ऋध् इति धात्वन्तस्य धकारस्य अचो रहाभ्यामिति द्वित्वाभावे सति झरो झरीति लोपे च सति एकधकारं रूपमित्यर्थः। असतीति। द्वित्वाभावे इत्यनुकृष्यते। तस्यैव ऋधेर्धकारस्य द्वित्वाभावे लोपे च असति द्विधकारं रूपम्। तथा तस्यैव ऋधेर्धकारस्य द्वित्वे लोपे च सति द्विधकारमेव रूपमित्यर्थः। सतीति। तस्यैव ऋधेर्धकारस्य द्वित्वे सति लोपे च असति त्रिधकारं रूपमित्यर्थः। यद्यपि द्विधपक्षे प्रथमधकारस्य, त्रिधपक्षे मध्यमधकारस्य च 'झलां जश् झशि' इति जश्त्वेन दकारो भवति। तथापि प्रक्रियाभिप्रायेण भूतपूर्वगत्या वा द्विधत्वं त्रिधत्वं चेति न दोषः। अथ तवल्कार इत्यत्राह—यण इति। यणः परस्य मयो द्वित्वमिति व्याख्याने ककारस्य द्वित्वं, लकारस्य तु अनचि चेति द्वित्वमित्यर्थः। तेनेति। लकारककारयोर्द्वित्वविकल्पेनेत्यर्थः। द्वित्वं लस्यैवेति। लकारस्य द्वित्वे ककारस्य द्वित्वाभावे च सति द्विलकारमेकककारं च प्रथमं रूपमित्यर्थः। कस्यैवेति। ककारस्य द्वित्वे लकारस्य द्वित्वाभावे द्विककारमेकलकारं च द्वितीयं रूपमित्यर्थः। नाभयोरिति। लकारककारयोरुभयोरपि द्वित्वाभावे एकलकारमेकककारं तृतीयं रूपमित्यर्थः। उभयोरपीति। लकारककारयोरुभयोरपि द्वित्वे द्विलकारं चतुर्थं रूपमित्यर्थः। तवल्कारादिष्विति। आदिना मनल्कारादिसङ्ग्रहः।

७२ वृद्धिरेचि ६।१।८८॥ आदेचि परे वृद्धिरेकादेशः स्यात्। गुणापवादः। कृष्णैकत्वम्। गङ्गौघः। देवैश्वर्यम्। कृष्णौत्कण्ठ्यम्। ७३ एत्येधत्यूठ्सु ६।१।८९॥ अवर्णादेजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात्। पररूपगुणापवादः। उपैति। उपैधते। प्रष्ठौहः। 'एजाद्योः' किम्। उपेतः। मा भवान्

---

वृद्धिरेचि। आद्गुण इत्यतः आदिति पञ्चम्यन्तमनुवर्तते। एकः पूर्वपरयोरित्यधिकृतम्। तदाह—आदेचीत्यादिना। गुणापवाद इति। 'आद्गुणः' इति प्राप्तावेतदारम्भादिति भावः। कृष्णैकत्वमिति। कृष्णस्य एकत्वमिति षष्ठीसमासः। 'पूरणगुण' इति निषेधस्त्वनित्य इति तत्रैव मूले वक्ष्यते। कृष्णेति सम्बुद्ध्यन्तं पृथक्पदमित्यन्ये। अत्र अकारस्य एकारस्य च कण्ठतालुस्थानकस्य स्थाने तथाविध ऐकार एकादेशः। गङ्गा ओघ इति स्थिते अकारस्य ओकारस्य च कण्ठोष्ठस्थानकस्य स्थाने तथाविध औकारः, एवं देवैश्वर्यम्। कृष्णौत्कण्ठ्यमित्यत्रापि। वस्तुतस्तु सङ्ख्याविशब्दा न गुणवचना इति तत्रैव वक्ष्यामः। एत्येधत्यूठ्सु। एतिश्च एधतिश्च ऊठ् चेति विग्रहः। एतीति एधतीति च 'इक्श्तिपौ धातुनिर्देशे' इति श्तिपा निर्देशः। इण् गताविति, एध् वृद्धाविति च धातू विवक्षितौ। एचीत्यनुवर्तते। 'यस्मिन्विधिः' इति तदादिग्रहणम्। एजाद्याविति लभ्यते। तच्च एत्येधत्योरेव विशेषणम्। न तु ऊठः, असम्भवात्। एकः पूर्वपरयोरित्यधिकृतम्। आद्गुण इत्यतः आदिति पञ्चम्यन्तमनुवर्तते। तदाह—अवर्णादित्यादिना। उपैतीति। इण् धातोर्लट् तिप् शप् लुक्। 'सार्वधातुक-' इति इकारस्य गुणः एकारः। उप एतीति स्थिते अनेन वृद्धिः। उपैधत इति। एध्-धातोर्लट् आत्मनेपदं तादेशः शप्। 'टित आत्मनेपदानाम्' इत्येत्वम्। उप एधते इति स्थिते अनेन वृद्धिः। प्रष्ठौह इति। प्रष्ठं वहतीति प्रष्ठवाट् 'वहश्च' इति ण्विः। 'वेरपृक्तस्य' इति वलोपः। 'अत उपधायाः' इति वृद्धिः। ततः शसि 'वसोः सम्प्रसारणम्' इत्यतः सम्प्रसारणमित्यनुवृत्तौ 'वाह ऊठ्' इति सम्प्रसारणसञ्ज्ञकस्य ऊठः सम्प्रसारणाच्चेति पूर्वरूपम्। प्रष्ठ ऊह् इति स्थिते अनेन वृद्धिः औकारः। नन्वत्र एत्येधतिग्रहणं व्यर्थम्, उपैति उपैधते इत्यत्र वृद्धिरेचीत्यनेनैव वृद्धिसम्भवात्। ऊठ् ग्रहणमपि व्यर्थम्, वृद्धिरेचीत्येव सिद्धेः। वाह ऊठ्सूत्रे, 'ऊठ् ग्रहणानर्थक्यं सम्प्रसारणेन कृतत्वात्। गुणस्तु प्रत्ययलक्षणत्वात्। एज्ग्रहणाद् वृद्धिः' इति वार्तिककृता तथैवोक्तत्वात्। ऊठ्ग्रहणं न कर्तव्यम्। वाहः इत्येव सूत्रमस्तु। अस्य वाहः सम्प्रसारणं स्यादिति सम्प्रसारणमेव विधीयताम्। ततश्च वकारस्य उकारे सम्प्रसारणे पूर्वरूपे सति उह इति स्थिते प्रत्ययलक्षणमाश्रित्य ण्विप्रत्यये परे उकारस्य लघूपधगुणे ओकारे कृते प्रष्ठ ओह इति स्थिते वृद्धिरेचीति वृद्धिरिति वार्तिकार्थः। तस्मादेत्येधत्यूठ्सु इति सूत्रं व्यर्थमित्यत आह—पररूपगुणापवाद इति। एत्येधत्योरेङि पररूप-

प्रेदिधत् । पुरस्तादपवादन्यायेनेयं वृद्धिः 'एङि पररूपम्' ( सू ७८ ) इत्यस्यैव

---

मित्यस्य, ऊठि आद्गुण इत्यस्याप्यपवाद इत्यर्थः । यदि हि वाहः सम्प्रसारणमेव विधीयेत न तु ऊठ्, तर्हि वस्य सम्प्रसारणेन उत्वे कृते पूर्वरूपे सति तस्य लघूपधगुणो न भवति, तस्मिन् कर्तव्ये बहिर्भूतशस्प्रत्ययापेक्षभसञ्ज्ञापेक्षसम्प्रसारणाश्रितपूर्वरूपस्य बहिरङ्गतया अत्र असिद्धत्वात्। तथा च गुणाभावे प्रष्ठ उ आह इति स्थिते पूर्वरूपे प्रष्ठ उह इति स्थिते आद्गुण इति गुणे ओकारे प्रष्ठोह इति स्यात् । सम्प्रसारणसञ्ज्ञकस्य ऊठो विधौ तु प्रष्ठ ऊ आह इति स्थिते पूर्वरूपे लघूपधगुणस्याप्रसक्ततया ओकारस्याभावादूकारस्यैव सत्त्वात् वृद्धिरेचीत्यस्याप्रसक्तेराद्गुण इति प्राप्ते एत्येधत्यूठ्स्विति वृद्धौ प्रष्ठौह इति सिध्यतीत्यूठ्ग्रहणमावश्यकमिति 'वाह ऊठ्' सूत्रे समुदाहृतवार्तिकं भाष्ये दूषितमित्यास्तां तावत् ।

उपेत इति । इण्-धातोर्लट् तस् शप् लुक् । 'सार्वधातुकमपित्' इति तसो ङित्वात् तस्मिन् परत इकारस्य न गुणः । अत्र इण्धातोरजादित्वाभावात्तस्मिन् परतो न वृद्धिः । मा भवान् प्रेदिधदिति । एध्-धातोर्णिच् । लुङ् तिप् । 'इतश्च' इति इकारलोपः । 'णिश्रिद्रुस्रुभ्यः' इति चङ् । 'णौ चङ्युपधाया ह्रस्वः' । 'चङि' इत्यजादेर्द्वितीयस्य धिशब्दस्य द्वित्वम् । अभ्यासे चर्चेति जश्त्वम् । न माङ्योग इत्याडभावः । भवच्छब्दयोगात् प्रथमपुरुषः । तच्च तिङन्ताधिकारे स्पष्टीभविष्यति । प्रइदिधदिति स्थिते एत्येधतीति न वृद्धिः, एध्धातोरेजादित्वाभावात् । तत्र एजादित्वविशेषणाभावे तु इहापि वृद्धिः स्यात् । न च 'णौ चङि' इत्येकारस्य ह्रस्वेन इकारे सति नायमेधधातुरिति वाच्यम् , एकदेशविकृतस्यानन्यत्वात् । अत्र माङं विहाय प्रेदिधदिति न प्रत्युदाहृतम् । तथा सति आडजादीनामित्याडागमे आटश्चेति वृद्धौ ऐदिधदिति स्यात् । तत्र एधतेरेजादित्वाद् वृद्धिरिष्टैव । भवच्छब्दस्तु चिन्त्यप्रयोजनः । ननु आ इहि आद्गुणः एहि, अव एहीति स्थिते एकादेशस्य गुणस्य एकारस्य अन्तादिवच्चेति परादिवत्त्वेन, आद्यन्तवदेकस्मिन्निति व्यपदेशिवद्भावेन च, इण्धातोरेजादित्वात्तस्मिन् परे एङि पररूपमिति पररूपं बाधित्वा एत्येधत्यूठ्स्विति वृद्धौ अवैहीति स्यात् । अवेहीति इष्टं न स्यात् । न च ओमाङोश्चेति पररूपेण तन्निर्वाहः शङ्क्यः । एत्येधतीति वृद्धिर्हि यथा एङि पररूपमित्यस्यापवादः, तथा ओमाङोश्चेत्यस्याप्यपवादः । येन नाप्राप्तिन्यायसाम्यात् इत्यत आह—पुरस्तादिति । 'पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरान्' इति न्यायः । पूर्वपठिता अपवादा अव्यवहितानेवोत्तरान् विधीन् बाधन्ते, न तु व्यवहितानित्यर्थः । प्रकृते च एत्येधत्यूठ्सु इत्युत्तरं कानिचित् सूत्राणि पठित्वा एङि पररूपमिति पठित्वा पुनः कतिपयसूत्राणि पठित्वा ओमाङो-

